તા રક્ત સાથે કફનો સંબંધ પણ છે, એમ જાણવું. ગુદામાંના રક્તાર્શોપિત્તના અર્શો જેવાજ હોય છે.

## કફાર્શનું લક્ષણ.

**श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः । उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥ पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः । वङ्क्षणानाहिनः पायुवस्तिनाभिविकर्षिणः । सकासश्वासहृल्लासप्रसेकारुचिपीनसाः मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः । क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ॥ वसाभासकफप्रायपुरीषाः सप्रवाहिकाः । न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धास्त्वगादयः ॥**

उत्सन्नाः उन्नताः । उपचिताः स्थूलाः । स्निग्धाः स्नेहाभ्यक्ताः । स्थिरा निश्चलाः । पिच्छिलाः कफोल्वणत्वात् । स्तिमिता आर्द्रचर्म्मावगुण्ठिता इव । श्लक्ष्णा मणिवन्मसृणाः । करीरो वंशाङ्कुरः । पनसास्थिगोस्तनाः । तदाकृतयः वङ्क्षणानाहिनः वङ्क्षणयोरानाहकारिणः । पाय्वादिष्वाकर्षणवत्पीडाकारिणः । कृच्छ्रं मूत्रकृच्छ्रम् । शिरोजाड्यं शिरोभागे शीताक्रान्तमिव । क्लैब्यं स्त्रीष्वनिच्छा । अत्र छर्दिशब्दः सान्त आर्षत्वात् । आमप्रायविकारदाः । आमबहुला व्याधयोऽतीसारग्रहण्यादयः तान् ददाति ॥

કફથી થયેલા અર્શો મ્હોટાં મૂળવાળા, ઘાટા, ધોળા, અને થોડી પીડાવાળા હોય છે. તેઓ ઊંચા, જાડા, ચીકણા, અક્કડ, ગોળ, ભારે, સ્થિર, પીછાંવાળા, લીસા, ચળવાળા, સ્પર્શથી સારૂં લાગે એવા, કેર તથા ફણુસના જેવા, ગાયના આંચળ જેવા, સાથળનાં મૂળ સજ્જડ કરનારા, તથા ગુદા નાભિ અને મૂત્રાશયમાં પીડા કરનારા હોય છે. ઉધરસ, શ્વાસ, મોળ, મુખમાં થૂંક, અરૂચિ, પીનસ, પ્રમેહ, દુબળાપણું, નાડીઓનું ભારે પણું, ટાઢા, અને જવર કરનારા હોય છે. નપુંસકપણું, અગ્નિમાંદ્ય, ઉલટી, અને આમરોગો કરનારા છે. વસા જેવા, કફ યુક્ત વિષ્ટાવાળા, અને પ્રવાહિકાવાળા હોય છે. તેઓ સ્રવતા નથી અને ભેદાતા પણ નથી. અને ચામડી વગેરે પાંડુવર્ણની તથા સ્નિગ્ધ થઇ જાય છે.

## બબ્બે દોષથી થતા અર્શનાં લક્ષણ.

**हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्वणानि च ।**

બે દોષનાં નિદાનો તથા લક્ષણો સાથે જોવામાં આવતાં હોય તે અર્શોને બે દોષની ઉલ્વણતાવાળા જાણવા.

## ત્રિદોષજ તથા સહજાર્શનાં લક્ષણ.

**सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च।**

सर्वलक्षणैर्वातपित्तकफार्शोलक्षणैः प्रागुक्तैः सर्वात्मकानि सन्ति । तान्यर्शांसि ॥ तथा तैरेव लक्षणैः सहजान्यर्शांस्याहुः ॥

**अर्शांसि सहजातानि दारुणानि भवन्ति हि । दुर्दर्शनानि पाण्डूनि परुषाण्यरुणानि च ॥ अन्तर्मुखानि तैरार्त्तः क्षीणः क्षीणस्वरो भवेत् । क्षीणानलः क्षीणरेताः शि-**

रासन्ततविग्रहः ॥ अल्पप्रजाः क्रोधशीलो भग्नकांस्यस्वनान्वितः । शिरोदक्कर्णनासासु रोगी श्लेष्मसेकवान् ॥

સર્વે દોષોનાં લક્ષણથી સર્વ દોષજ તથા એજ ચિન્હોવાળા સહજાર્શ પણ હોય છે. સહજ એટલે શરીરની સાથેજ થયેલા અર્શો દારુણ, ત્રાશદાયક, પાંડું, કઠણ, રાતા અને પંદર મુખવાળા હોય છે. એથી શરીર અને સ્વર તથા અગ્નિ ક્ષીણ થઇ જાય છે, વીર્ય ક્ષીણ થાય છે, અને શરીરમાં નસો દેખાય છે. એ રોગી અલ્પ પ્રજાવાળો, ક્રોધી, ફુટેલા કાંસાના જેવા શબ્દવાળો, તથા માથું, નેત્ર, કાન, અને નાકમાં રોગોવાળો હોય છે. છાતી કફથી ભરેલી અને મુખમાંથી લાળ ઝરે એવો થાય છે.

## સુખસાધ્ય અર્શો.

बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च । अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥

बाह्यायां वलौ सम्वरण्याम् । न चिरोत्पतितानि अनतिक्रान्तसम्वत्सराणि एतानि लक्षणानि मिलितानि सुखसाध्यत्वबोधकानि ॥

બહારની વળીમાં ( સંવરણીમાં ) થયેલી, એક દોષવાળા, અને થોડા કાળથીજ થયા હોય, તે અર્શો સુખસાધ્ય છે. (એક વર્ષ પછી અર્શ જીર્ણ થયા જાણવા).

## કષ્ટસાધ્ય અર્શો.

द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च । कृच्छ्रसाध्यानि तान्याहुः परिसम्वत्सराणि च ॥

द्वितीयायां वलौ विसर्जन्याम् । परिगतः सम्वत्सरो येषां तान्यतीतसम्वत्सराणीति यावत् । एतानि प्रत्येकं कष्टसाध्यलक्षणानि ॥

બે દોષથી થયેલા, ગુદાની બીજી વળી (વિસર્જની) માં થયેલા, અને એક વર્ષ ઉપરના હોય, તે અર્શોને કષ્ટસાધ્ય જાણવા.

## અસાધ્ય અર્શો.

सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम् । जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥

अभ्यन्तरां वलिं प्रवाहिणीम् । एतान्यपि प्रत्येकमसाध्यानि लक्षणानि ॥

शेषत्वादायुषस्तानि चतुष्पादसमन्वये । याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥

यद्यायुःशेषो वर्त्तते चिकित्सायाः चत्वारः पादास्ते यदा वैद्यवचनकारी धनवानुदारो जितेन्द्रियो रोगी । शस्त्रकर्मणि कुशलो वैद्यः । अनलसः आप्तः प्रियः परिचारकः । नवरसवीर्यादिकमौषधं । एषां समन्वये समागमे । अतिदीप्तकायाग्नेः पुरुषस्य तानि अर्शांसि याप्यन्ते चिकित्सायाम् । अतोऽन्यथा प्रत्याख्येयानि चिकित्साहीनानीत्यर्थः ॥

શરીરની સાથેજ થયેલા અર્શો અથવા ત્રણે દોષથી થયેલા અર્શો અથવા ગુદાની અંદરની છેલ્લી વળી ( પ્રવાહિની )માં થયા હોય, તો તેઓ અસાધ્ય છે. રોગીનું આયુષ્ય બાકી હોય, ચિકિત્સાના ચારે પાદ સંપૂર્ણ હોય, અને

જઠરાગ્નિ પ્રદીપ્ત હોય, તો તો ચિકિત્સા કરવાની નાજ પાડી દેવી. વૈદ્ય શસ્ત્રક્રિયામાં કુશળ, પરિચારક આળસ વગરનો, સત્ય બોલનારો અને લોકપ્રિય હોય, તેમજ રોગી વૈદ્યના કહ્યા પ્રમાણે ચાલનારો, ધનવાન, ઉદાર અને જીતેંદ્રિય હોય, અને ઔષધ નવીન રસવાળું, તથા વિર્ય વગેરે વાળું હોય તો ચિકિત્સાના ચારે પાદ સંપૂર્ણ સમજવા.

## અર્શોનું અરિષ્ટ.

**हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा । शोथो हृत्पार्श्वशूलं च यस्यासाध्योऽर्शसो हि सः ॥**

असाध्यः सन्निहितमरणो बोद्धव्यः । अर्शसः अर्शोरोगयुक्तः ॥

**हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग्ज्वरः। तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम्॥** गुदस्य चास्यमोष्ठदेशस्तस्य पाकः । हृत्पार्श्वशूलादिसमस्तं चारिष्टलक्षणम् ॥

**तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम् । शोथातीसारसंयुक्तमर्शांसि क्षपयन्ति हि ॥**

હાથ, પગ, મુખ, નાભિ, ગુદા, અને વૃષણોમાં સોજો હોય, તથા હૃદય અને પડખામાં શૂળ હોય, તેના અર્શ અસાધ્ય જાણવા. તેમાં પણ હૃદય તથા પડખામાં શૂળ હોય, મોહ અને ઉલટી હોય, અંગમાં પીડા તથા જ્વર હોય, તરશ હોય અને ગુદાપાકેલ હોય, તો તે રોગી તુરત મરી જાય છે. તરશ, અરૂચિ, તથા શુળવાળા, અથવા સોજા અને અતિસારવાળા, અથવા લોહી બહુ ઝરી ગયું હોય, તે રોગી પણ મરી જાય છે.

## લિંગાદિના અર્શોનું લક્ષણ.

**मेढ्रादिष्वपि जायन्ते यथास्वं नाभिजानि च । गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥** नचात्रोक्तनिदानपूर्वं सम्प्राप्तिलक्षणं युक्तम् । तत्रार्शः पदन्तु मांसाङ्कुरसाम्यात् । गण्डूपदः किञ्चुलकः ॥

લિંગ વગેરેમાં તથા નાભિમાં પણ અર્શો થાય છે. તેઓ અળશિયાના મુખ જેવા, પીછાંવાળા, તથા કોમળ હોય છે. આ અર્શોને આગળ કહ્યા પ્રમાણે નિદાનોપૂર્વક સંપ્રાપ્તિ લાગુ થતી નથી, તોપણ તે માંસના અંકુર જેવા હોવાથી તેને 'અર્શ, નામ આપેલું છે.

## ચર્મકીલનું લક્ષણ.

**व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः कीलोपमं स्थिरखरं चर्मकीलं तु तद्विदुः ॥** खरं कर्कशम् ॥

**वातेन तोदपारुष्यं पित्तादसितरक्तता । श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता॥** सवर्णता शरीरसमानवर्णता ॥

વ્યાનવાયુ કફને પકડીને ચામડી બહાર અર્શ ઉત્પન્ન કરે છે, તે અર્શની પેઠે સ્થિર અને ખરસટ હોવાથી ચર્મકીલ કહેવાય છે. વાયુથી થયેલ ચર્મકીલ પીડાવાળો અને કઠણ હોય છે, પિતનો કાળો તથા રાતો હોય છે, અને કફનો સ્નિગ્ધ તથા ગૂંથાયલો અને શરીરના જેવાજ રંગનો હોય છે.

## અર્શોની સામાન્ય ચિકિત્સા.

यद्वातस्यानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसैः ॥

अर्शसैः अर्शोरोगयुक्तैः ॥

शालिषष्टिकगोधूमयवान्नानि घृतैः सह। अजाक्षीरेण वा निम्ब पटोलानां रसेन वा ॥ कान्दैर्वार्त्ताकुमूलोत्थै रसैर्मांसरसेन वा । जीवन्तुपोदिकाशाकैस्तण्डुलीयकवास्तुकैः॥ अन्यैश्च सृष्टविणमूत्रमरुद्भिर्वह्निदीपनैः । अर्शांस्य भिन्नवर्चांसि हन्याद्वातातिसारवत् ॥ सतक्रं लवणं दद्याद्वातवर्चोऽनुलोमनम् । न प्ररोहन्ति गुदजाः पुनस्तक्रसमाहताः । तक्राभ्यासोऽर्शसैः कार्यो बलवर्णोऽग्निवृद्धये । स्रोतःसु तक्रशुद्धेषु सम्यक् चलति तद्रसः ॥ तेन पुष्टिस्तथा तुष्टिर्बलं वर्णश्च जायते । वातश्लेष्मविकाराणां शतञ्च विनिवर्त्तते ॥ चिरबिल्वाग्निसिन्धूत्थनागरेन्द्रयवारलुम् । तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह ॥

चिरबिल्वः करञ्जः तस्य फलस्यात्र मज्जा ग्राह्या । अरलुः शोणकः । इति करञ्जादिचूर्णम् ॥

लेपं रजनिचूर्णेन सुधादुग्धयुतेन च । अर्शोरोगनिवृत्त्यर्थं कारयेत्तु चिकित्सकः॥ पिप्पली सैन्धवं कुष्ठं शिरीषस्य फलं तथा। सुधादुग्धार्कदुग्धं वा लेपोऽयं गुदजान् हरेत् ॥ हरिद्रा जालिनीचूर्णं कटुतैलसमन्वितम् । एष लेपो वरः प्रोक्तो ह्यर्शसामन्तकारकः ॥

जालिनी कटुतोरइ इति लोके ॥

असितानां तिलानान्तु पलं शीतजलेन च । खादन्तोऽर्शांसि शाम्यन्ति दृढा दन्ता भवन्ति च ॥ शस्त्रेणाथ जलौकोभिः प्रोच्छूनकठिनार्शसः ॥ शोणितं सञ्चितं दृष्ट्वा हरेत्प्राज्ञः पुनः पुनः । काशीसं सैन्धवं कृष्णा शुण्ठी कुष्ठञ्च लाङ्गली ॥ शिलाभिदश्वमारश्च दन्ती जन्तुघ्नचित्रकम् । तालकं कुनटी स्वर्णक्षीरी चैतैः पचेद्भिषक् ॥ तैलं स्नुह्यर्कपयसा गवां मूत्रं चतुर्गुणम् । एतदभ्यङ्गतोऽर्शांसि क्षारेणेव पतन्ति हि ॥ क्षारकर्मकरं ह्येतन्न च सन्दषयेद्वलिम् ॥

काशीसङ्कासीस इति लोके । लाङ्गली करिहारीति लोके । शिलाभित् पाषाणभेदः अश्वमारः कनैलि इति लोके । स्वर्णक्षीरी चोष इति लोके । इति बृहत्काशीसाद्यतैलम् ॥

शुण्ठी कणा मरिचनागदलत्वगेलं चूर्णीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात् । खादेदिदं समसितं गुदजाग्निमान्द्यगुल्मारुचिश्वसनकण्ठहृदामयेषु ॥

तद्यथा एलाबीजमत्र सूक्ष्मं ग्राह्यम् । अत आह मदनपालः ॥ ‘एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रनुत्’ इत्यादि तस्या बीजं भागः १ तगभाग २ दलं पत्रकम् ३ यत आह निघण्टधन्वन्तरिः । ‘नागपुष्पं मतं नागं केशरं नागकेसरम्’ इत्यादि । तस्य भागः ४ मरिच ५ पीपरि ६ सोंटि ७ शीनी साकर २८ समशर्करचूर्णम् ॥

त्रिकत्रयं वचा हिङ्गु पाठाक्षारौ निशाद्वयम्। चव्यतिक्ताकलिङ्गानि शक्राकोलवणानि च ॥ ग्रन्थिबिल्वाजमोदाच गणोऽष्टाविंश-

तिर्मतः। एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ चूर्णं विडालपदकं पिबेदुष्णेन वारिणा। एरण्डतैलयुक्तं वा लिह्याच्चुर्णमिदं नरः॥ हन्यादर्शांसि सर्वाणि श्वासशोषभगन्दरान्। हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम् ॥ हिक्कां कासं प्रमेहांश्च पाण्डुरोगं सकामलम्। आमवातमुदावर्त्तमन्त्रवृद्धिं गुदक्रुमीन् ॥ अन्ये च ग्रहणीदोषा भिषग्भिर्ये प्रकीर्त्तिताः। विजयो नाम चूर्णोऽयं तान् सर्वानाशु नाशयेत् ॥ महाज्वरोपसृष्टाना भूतोपहतचेतसाम्। अप्रजानाञ्च नारीणां हितमेतद्धि भेषजम् ॥

त्रिकत्रयं त्रिफला। त्रिकटु त्रिसुगन्धीनि। क्षारौ सर्जिका जवक्षारश्च। लवणानि पञ्च। ग्रन्थि पिप्पलीमूलम्। विडालपदकं कर्षम्। इति विजयचूर्णम् ॥

मरिचमहौषधचित्रकशूरणभागा यथोत्तरं द्विगुणाः। सर्वसमो गुडभागः सेव्योऽयं मोदकः प्रसिद्धफलः॥ ज्वलनं ज्वलयति जाठरमुन्मूलयतीह शूलगुल्मगदान्। निःशेषयति श्लीपदमर्शांसि विनाशयत्याशु ॥

तद् यथा। मरिचभाग १। शुण्ठीभाग २। चीताभाग ४ ॥ शूरणभाग ८। गुडभाग १५ ॥ इति लघुशूरणमोदकः ॥

षोडश शूरणभागा वह्नेरष्टौ महौषधस्य स्यात्। अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन ॥ त्रिफलाकणासमूलातालीशारुष्करक्रुमिघ्नानाम्। भागा महौषधसमा दहनांशा तालमूली च ॥ भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि। भृङ्गैले मरिचांशे सर्वाण्येकत्र कारयेच्चूर्णम्॥ द्विगुणेन गुडेन युतः सेव्योऽयं मोदकः प्रकामघनैः। गुरुवृष्यभोजनरतैरितरैरुपद्रवं कुर्यात् ॥ भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन। भीमस्य मारुतेरपि महाशनौ तेन तौ जातौ ॥ अग्निबलवर्णहेतुर्न केवलं शूरणो महावीर्यः। हन्ता शस्त्रक्षारानलैर्विनाप्यर्शसामेषः॥ श्वयथुश्लीपदगदहृद्ग्रहणीं च कफानिलोद्भूताम्। नाशयति वलीपलितं मेधां कुरुते जराञ्च हरेत् ॥ हिक्कां च राजरोगं कासं श्वासं प्रमेहांश्च। प्लीहानं च तथोग्रं हन्त्याशु रसायनं पुंसाम् ॥

एषां भागा यथा। शूरणभाग १६ ॥ चीताभाग ८। शुण्ठीभाग ४ ॥ मरिचभाग २। हरडे। बहेडा। आमला। पीपरि। पिपरामूल। तालीश। भेला। तदसद्भावे रक्तचित्रकम्। विडङ्गं प्रत्येकं भाग ४। तालमूलीभाग ३। विधारा भाग १६। तजभाग १। इलाची छोटी बीजभाग १। गुडभाग १६०। इति बृहच्छूरणमोदकः ॥

त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा चित्रकंशटी। गवाक्षीमुस्तविश्वाह्वविडङ्गानि हरीतकी ॥ पलोन्मितानि चैतानि पलान्यष्टावरुष्करात्। वृद्धदारात्पलान्यष्टौ शूरणस्य तु षोडश ॥ जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम्। पूतं पूतं रसं भूयः क्वाथेभ्यस्त्रिगुणं गुडम् ॥ मेलयित्वा पचेत्तावद्यावद्दर्वीप्रलेपनम्।

अवतार्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥ तृवृत्तेजोवतीकन्दचित्रकान् द्विपलांशकान् ।एलात्वाङ्मरिचं चापि नागकश्चापि षट्पलम् ॥ द्वात्रिंशच्च पलान्यत्र चूर्णयित्वा निधापयेत् । ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशिनः ॥ कन्दः शूरणः ॥

हन्यादर्शांसि सर्वाणि तथा सर्वोदराण्यपि । गुल्मानपि प्रमेहांश्च पाण्डुरोगं हलीमकम् ॥ दीपयेदनलं मन्दं यक्ष्माणं चापकर्षति । आढ्यवाते प्रतिश्याये पीनसे च हितो मतः ॥ भवन्त्यनेन पुरुषाः शतं वर्षाण्यनामयाः । दीर्घायुषः प्रजनना वलीपलितवर्जिताः ॥ गुडः श्रीबाहुशालोऽयं रसायनवरो मतः । दुर्नामान्तकरो ह्येष दृष्टोवारसहस्रशः ॥ यावद्दर्वीप्रलेपः स्याद्गुडो वा तन्तुमान् भवेत् । तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः । क्षिप्तस्तु निश्चलस्तिष्ठेत्पातितस्तु न शीर्यति । एष पाकः समस्तानां गुडानां परिकीर्तितः । सार्द्धं पलं पलं चार्द्धं भक्षयेद् गुडखण्डयोः। श्रेष्ठा तु मध्यमा हीना मात्रोक्ता मुनिभिस्त्रिधा ॥ श्रीबाहुशालो गुडः ॥

तिलभल्लातकौ पथ्या गुडश्चेति समांशकैः । दुर्नामश्वासकासघ्नाः प्लीहपाण्डुज्वरापहाः ॥ पित्तश्लेष्मप्रशमनी कण्डूकुक्षिरुजापहा । गुदजान्नाशयत्याशु भाक्षिता सगुडाभया ॥ प्रणम्य शङ्करं रुद्रं दण्डपाणिं महेश्वरम् । जीवितारोग्यमन्विच्छन्नारदोऽपृच्छदीश्वरम् ॥ सुखोपायेन हे नाथ ! शस्त्राक्षाराग्निभिर्विना । चिकित्सामर्शसां नृणां कारुण्याद्वक्तुमर्हसि ॥ नारदस्य वचः श्रुत्वा नराणां हितकाम्यया । अर्शसां नाशनं श्रेष्ठं भैषज्यं शङ्करोऽब्रवदत् ॥ पाण्ड्यवज्रादिलोहानामादायान्यतमं शुभम् । कृत्वा निर्मलपात्रौ तु कुनट्या माक्षिकेण च ॥ पत्तूरमूलकल्केन लिम्पेद्रसयुतेन च ॥

कुनटी मनःशिला माक्षिकं सुवर्णमाक्षिकम्, पत्तूर पटकार इति लोके । रसः पारदः ॥

वन्हौ निक्षिप्य विधिवत्साराङ्गारेण निर्द्धमेत् । ज्वाला च तस्य रोद्धव्या त्रिफलाया रसेन च ॥ सारः काष्ठासारः ॥

ततो विज्ञाय गलितं शङ्कुनोर्ध्वं समुच्छ्रयेत् त्रिफलाया रसे पूते तदाकृष्य तु निर्वपेत् ॥ न सम्यक् गलितं यत्तु तेनैव विधिना पुनः । ध्मातं निर्वापयेत्तस्मिंल्लोह तात्रिफलारसे ॥ यल्लोहं न मृतं तत्र पाच्यं भूयोऽपि पूर्ववत् । मारणान्न मृतं यच्च तत् पक्तव्यमलोहवत् ॥ ततः संशोष्य विधिवच्चूर्णयेल्लोहभाजने । लौहं तच्च तथा यत्स्याद्दृषदा सूक्ष्मचूर्णितम् ॥ कृत्वा लोहमये पात्रे मृत्तिकालिप्तरन्ध्रके । रसैः पङ्कोपमं कृत्वा तं पचेद् गोमयाग्निना ॥ पुटानि क्रमशो दद्यात्पृथगेभिर्विधानतः । त्रिफलार्द्रकभृङ्गानां केशराजस्य बुद्धिमान् ॥ मानकन्दकभल्लातवह्नीनां शूरणस्य च । हस्तिकर्णपलाशस्य कुलिशस्य तथैव च ॥

भृङ्गः भेङ्गरिआ केशराजः केशराग इति ॥

पुटे पुटे चूर्णयित्वा लोहात्षोषशिकं

पलम् । तन्मात्रं त्रिफलायाश्च पलेनाधिकमाहरेत् । अष्टभागावशेषे तु रसे तस्याः पचेद् बुधः ॥ अष्टौ पलानि दत्त्वा च सर्पिषो लोहभाजने । ताम्रे वा लोहदर्व्या तु चालयेद्विधिपूर्वकम् ॥ ततः पाकविधानज्ञः स्वच्छे चोर्ध्वे च सर्पिषि । मृदुमध्यादिभेदेन गृह्णीयात्पाकमादृतः ॥ आरम्भे तद्विधानज्ञः कृतकौतुकमङ्गलः । भ्रामरं घृतसंयुक्तं त्रिलिह्याद्रत्तिकाक्रमात् ॥

द्वादशरत्तिकापर्यन्तं यथाग्निबलं खादेत् ॥

वर्द्धमानानुपानश्च गव्यक्षीरेण संयुतम् । गव्याभावे त्वजायाश्च स्निग्धवृष्यादिभोजनम् ॥ सद्यो वह्निकरश्चैव भस्मकश्च नियच्छति । हन्ति वातं तथा पित्तं कुष्ठानि विषमज्वरम् ॥ गुल्माक्षिपाण्डुरोगांश्च निद्रालस्यमरोचकम् । शूलश्च परिणामश्च प्रमेहमपबाहुकम् ॥ श्वयथुं रुधिरस्रावं दुर्नामानं विशेषतः । बलकृद्बृंहणश्चैव कान्तिदं स्वरबोधनम् ॥ शरीरलाघवकरमारोग्यं पुष्टिवर्द्धनम् । आयुष्यं श्रीकरश्चैव बलतेजस्करं शुभम् ॥ सश्रीकं पुत्रजननं वलीपलितनाशनम् दुर्नामारिरयं नाम्ना दृष्टो वारसहस्रशः ॥ अनेनार्शांसि दह्यन्ते यथा तूलश्च वह्निना । सौकुमार्याल्पकायत्वान्मद्यसेवी यदा नरः ॥ जीर्णमद्यादियुक्तादिभोजनैः सह दापयेत् । लावतित्तिरवर्त्तीरमयूरशशकादयः ॥ चटकः कलविङ्कश्च वर्त्तका हरितालकः । श्येनकश्च बृहल्लावो वनत्रिष्किरकादयः॥ पारावतमृगादीनां मांसं जाङ्गलकं शुभम् ॥

वर्त्तीरः बगेरीति लोके । वनचटकः कलविङ्कः। गृहचटकः । वर्त्तका बंटरि इति लोके । हरितालकः हरिताल इति लोके । त्रिष्किरा वर्त्तकादयः ॥

मद्गुरो रोहितः श्रेष्ठः शकुलश्च विशेषतः । मत्स्यराजा इति प्रोक्ता हितमत्स्याय देहिने ॥ वृन्ताकस्य फलं शस्तं पटोलं बृहतीफलम् । प्रलम्बा भीरुवेत्राग्रन्ताडकन्तण्डुलीयकम् ।

प्रलम्बा बा लम्बालाबूः । भीरुः शतावर्याः पत्रं पत्रशाकम् । ताडकं देवदाली अकरकरेति लोके । तथा च निघण्टे धन्वन्तरिः ॥

जीमूतको देवताडः कृतकोशो गरागरी। प्रोक्ताखुविषहृद्वेणी देवदाली च ताडकः देवदाली रसे तिक्ता कफार्शः शोथपाण्डुताः ॥ नाशयेदित्यादि ॥

वास्तूकं धान्यशाकञ्च चित्रकश्चक्रमर्द्दकम् ॥ चक्रमर्दकश्चकवडशाकम् ॥

नालिकेरश्च खर्जूरं दाडिम लवलीफलम्। शृङ्गाटकश्च पकाम्रं द्राक्षातालफलानि च ॥ हितान्येतानि वस्तूनि लोहमेतत् समश्नताम् । नाश्नीयाल्लकुचं कोलकर्कन्धूबदराणि च ॥ जम्बीरं बीजपूरश्च तिन्तिडी करमर्दकम् ॥

कोलं क्षुद्रबदरम् । कर्कन्धू बृहद्बदरम् ॥

आनूपानि च मांसानि कक्करं पुण्ड्रकाणि च । हंससारसदात्यूहचापक्रौञ्चबलाकिकाः ॥ मानकन्दं कसेरूणि कतकञ्च कालिङ्गकम् ॥

क्रकरं करकरं । दात्यूहं डाका । चापः नीलकंठम् । कलिंगकं तरबुजम् ॥

कूष्माण्डकञ्च कर्कोटं क्रमुकञ्च विशेषतः । कटुकं कालशाकञ्च कुण्डुरुं कर्कटीं तथा । ककारादीनि सर्वाणि द्विदलानि च वर्जयेत् ॥ शङ्करेण समाख्यातो यक्षरा मानुकम्पया । जगतामुपकाराय दुर्नामारिरयं ध्रुवम् ॥ स्थानाचलति मेरुश्च पृथ्वी पर्येति वायुना । पतन्ति चन्द्रताराश्च मिथ्या चेदहमध्रुवम् ॥ ब्रह्मघ्नाश्च कृतघ्नाश्च क्रूरा येऽसत्यवादिनः । वर्जनीयाः स यत्नेण भिषजा गुरुनिन्दकाः । मुनिरसविष्टविडङ्गं मुनिरसलीढं चिरस्थितं घर्मे । द्रावयति लोहदोषान् वह्निर्नवनीतपिण्डमिव ॥ मुनिरत्रागस्त्यः ।

कालेमलप्रवृत्तिर्लाघवमुदरे विशुद्धिरुद्गारे । अङ्गेषुनावसादो मनःप्रसादोऽस्य परिपाके । क्रिमिरिपुचूर्ण लीढं सहितं स्वरसेन वङ्गसेनस्य । क्षपयत्यचिरान्नियतं लोहाजीर्णोद्भवं शूलम् ॥

वङ्गसेनस्य अगस्तेः ॥

भवेच्चयतिसारस्तु दुग्धं पीत्वा तु तं जयेत् ।गुञ्जाद्वादशकादूर्ध्वं वृद्धिरस्य भयप्रदा॥ शङ्करप्रणीतं लोहम् । इति सामान्याः क्रियाः॥

વાયુનું અનુલોમન કરનારાં તથા અગ્નિને વધારનારાં, એવાં સર્વ અન્નપાન ઔષધો અર્શોવાળાને આપવાં.

ચોખા, સાઠીચોખા, ઘઊં, અને જવનાં ભોજનો ઘી સાથે, અથવા બકરીના દુધ સાથે, લીમડો કે પટોળના રસો સાથે, રીંગણીના કંદના રસ સાથે, કે માંસ રસ સાથે આપવાં. વિષ્ટાનું ભેદન ન થતું હોય એવા અર્શોને મીઠી ખરખોડી, પોથી, તાંદળજો, અને બથવાનાં શાકોથી, તથા બીજા વિષ્ટા, મૂત્ર, અને વાયુને કાઢનારા અને દીપન પદાર્થોથી મટાડવા. વાયુ તથા વિષ્ટાને યોગ્ય માર્ગે લાવનાર ઘાટી છાશ લૂણ સાથે ખાવી. ઘાટી છાશથી હણાયલા અર્શો પાછા થતા નથી. 'ઘાટી છાશથી બળ, અગ્નિ, અને વર્ણ વધે છે, તેથી નાડીઓ શુદ્ધ થઇને અન્નાદિકનો રસ સારી રીતે તેમાં ચાલી શકે છે, અને તેથી વર્ણ, તુષ્ટિ, પુષ્ટિ, અને બળ વધે છે, તથા વાયુ અને કફના સેંકડો રોગો મટી જાય છે.

કરંજાદિ ચૂર્ણઃ—કરંજના ફળનો ગર્ભ, ચિત્રક સેંધવ, સૂંઠ, ઇંદ્રજવ, અરલુ, એનું ચૂર્ણ છાશમાં ખાવાથી લોહી સહિત અર્શો ખરી પડે છે.

રજની લેપઃ—થોરના દૂધમાં હળદર વાટીને વૈદ્યે અર્શની શાંતિ માટે લેપ કરવો.

પિપ્પલ્યાદિ લેપઃ—પીપર, સેંધવ, કઠ, સરસડીયાનું ફળ, એમનાં ચૂર્ણને થોરના કે આકડાના દૂધમાં વાટીને લેપ કરવાથી અર્શો મટી જાય છે.

હરિદ્રાદિ લેપઃ—હળદર તથા કડવી ઘીસોડીનું ચૂર્ણ સરસિયા તેલમાં કાલવીને લેપ કરવાથી તે અર્શ મટાડવામાં ઉત્તમ લેપ ગણાય છે.

તિલ ભક્ષણઃ—ચાર તોલા કાળા તલ ટાઢા પાણીમાં ખાવા, તેથી અર્શો શાંત થાય છે, તથા દાંતો મજબૂત થાય છે.

રૂધિર સ્રાવણુઃ—શસ્ત્રથી કે જળો મૂકીને કઠણુ થયેલા લોહી ભરાયલા અર્શોમાંથી સમજુ વૈદ્યે વારંવાર લોહી કાઢી નાંખવું.

બૃહત્કાશી સાધ્ય તૈલઃ—હીરાકસી, સેંધવ, પીપર, સૂંઠ, કલગારી, પાષાણભેદ, કણેર, નેપાળો, વાવડીંગ, ચિત્રક, હરતાળ, માલકાંકણી, અને દારુડીનાં મૂળ, આના કલ્ક સાથે ચોગણા ગોમૂત્રમાં, થોરનાદૂધમાં અને આકડાના દૂધમાં તેલ પકવવું, આ તેલ ચોપડવાથી ક્ષારથી અર્શો પડી જાય છે, આ ક્ષાર કર્મથી વળીને પણ કંઈ હરકત આવતી નથી.

સમશર્કર ચૂર્ણઃ—સૂંઠ, પીપર, મરી, નાગકેશર, તમાલપત્ર, તજ, એલચી, એ પ્રત્યેકક્રમ સર સાત, છ, પાંચ, ચાર, ત્રણ, બે, અને એક ભાગે લેઇને ચૂર્ણ કરી, અર્શ, અગ્નિમાંદ્ય, ગુલ્મ, અરુચિ, શ્વાસ, તથા કંઠ અને હૃદયના રોગો ઉપર સમાન સાકર સાથે ખાવું. ( એલચી ઝીણી લેવી.

વિજય ચૂર્ણઃ—ત્રિફળા, વજ, હિંગ, કાળીપાડ, જવખાર, હળદર, દારુહળદર, ચવક, કડુ, કડાછાલ, ત્રિકટુ, ઇંદ્રજવ, પંચલવણ, પીપરીમૂળ, બીલી, અજમોદ, અને ત્રિસુગંધી, આ અઠાવીશ પદાર્થોનો ગણુ છે. તે સર્વે સમ ભાગે લેઇ ઝીણું ચૂર્ણ કરવું. આ ચૂર્ણ એક તોલો ગરમ પાણીમાં ખાવું, અથવા તો એરંડ તેલમાં કાલવીને ચાટવું. એથી સર્વ અર્શો, શ્વાસ, શોષ, ભગંદર, હૃદય શૂળ, પડખાનું શૂળ, વાતરોગ, ગુલ્મ, ઉદરરોગો, હેડકી, ઉધરસ, પ્રમેહ, પાંડુ રોગ, કમળો, આમવાત, ઉદાવર્ત્ત, અંતર્વૃદ્ધિ, ગુદરોગો, કૃમિઓ, અને બીજા પણ ગ્રહણીના રોગો જે વૈદ્યોએ કહેલા છે તે સર્વે મટી જાય છે. તે સર્વેનો નાશ એકદમ આ વિજય નામનું ચૂર્ણ કરી નાંખે છે. મહાજવર કે ભૂત વળગાડથી ચિત્ત હરાયું હોય તેને, તથા પ્રજાવગરની નારીને આ ઔષધ હિતકારી છે.

લઘુ સૂરણમોદકઃ—મરી, સુંઠ, ચિત્રક, અને સુરણ, એ એક, બે, ચાર, અને આઠ ભાગે ક્રમસર લઈ, તેમા તે સર્વ જેટલો ગોળ નાખી મોદક બનાવી ખાવા. તે અગ્નિને પ્રદીપ્ત કરે છે, ઉદર રોગો મટાડે છે, શુળ તથા ગુલ્મના રોગો તથા શ્લીપદ અને અર્શોનો તુરંત નાશ કરી નાંખે છે.

બૃહત્સૂરણમોદકઃ—સુરણ ૧૬ ભાગ, ચિત્રક ૮ ભાગ, સુંઠ ૪ ભાગ, મરી ૨ ભાગ; તથા ચાર ચાર ભાગ ત્રિફળા, પીપર, પીપરીમૂળ, તાલીસપત્ર, ભીલામો, અને વાવડીંગ; ત્રણ ભાગ કાળી મૂસળી, ૧૬ ભાગ વરધારો, એક એક ભાગ તજ, અને એળચી; એ સર્વ એકત્ર કરી ચુર્ણ કરવું. પછી બમણા ગોળમાં મોદક બનાવી ઇચ્છાનુસાર ખાવા. ભારે અને વીર્યવર્ધક ભોજન ખાનારને આ મોદક ખાવાના છે, બીજાને નુકશાન કરેછે. પૂર્વે આ મોદકે અગસ્ત્ય મુનિને તથા વાયુના પુત્ર ભીમસેનને ભસ્મક રોગ કર્યો હતો, તેથી તેઓ બહુ ખાનારા થયા હતા. આ મોદકથી માત્ર અગ્નિ, વર્ણ, અને બળ વધે છે, એટલુંજ નહી, પણ શસ્ત્રો, ક્ષારો, અને અગ્નિ વિના અર્શોને તે બા-

ળી નાંખેછે. સોજા, શ્લીપદ, તથા કફ અને વાયુથી થયેલા મરડાને તે મટાડેછે. વળિયાં, પળિયાં, તથા વૃદ્ધાવસ્થાને તે હણેછે, બુદ્ધિ વધારેછે, અને હેડકી, ક્ષય, ઉધરસ, શ્વાસ, પ્રમેહ, તથા મહા ઉગ્ર બરલના રોગનો તે નાશ કરી નાંખે છે. આ મોદક પુરૂષોને માટે રસાયન રૂપછે.

શ્રી બાહુશાલગુડઃ—નસોતર, તેજબળ, નેપાળો, ગોખરૂ, ચિત્રક, કચુરો, ઇંદ્રવારુણી, મોથ, સૂંઠ, નાગરમોથ, વાવડીંગ; હરડે, એ દરેક ચાર ચાર તોલા; ભીલામાં ૩૨ તોલા; વર્ધારો ૩૨ તોલા; સૂરણ ૬૪ તોલા; આ સર્વનો ૨૦૪૮ તોલા પાણીમાં ક્વાથ કરવો. ચોથો ભાગ બાકી રહે એટલે ગાળી લેઇને તેમાં સર્વ દ્રવ્યોથી ત્રણ ગણો ગોળ નાંખીને પકાવવો. કડછીને ચોંટે તેવું થાય એટલે ઊતારીને તેમાં નસોતર, તેજબળ, સૂરણ, ચિત્રક, દરેક આઠ આઠ તોલા; તથા એલચી, તજ, મરી, અને નાગકેશર, દરેક ચોવીસ ચોવીસ તોલા નાંખવાં. આને રાખી મૂકી જીર્ણ થયે ક્ષીર સાથે ખાવો. તે સર્વ અર્શો તથા સર્વ ઉદરરોગોને હણે છે. ગુલ્મ, પ્રમેહ, પાંડુ, અને હલીમકને પણ મટાડે છે. અગ્નિને વધારે છે, ક્ષયને મટાડે છે. પુષ્કળ વાયુ, સળેખમ, અને પીનસમાં તે હિતકારી છે. આથી પુરુષ સો વર્ષ સુધી રોગ રહિત જીવે છે. આયુષ્ય વધે છે અને વળિયાં પળિયાં મટે છે. આ બાહુશાલ નામનો ગુડ પરમ રસાયન છે. હજારોવાર તે અર્શોને હણી નાંખતો જણાયો છે. કડછીને ચોંટે અને ગોળના તાર ચાલે, અને પાણીમાં નાંખતાં ડુબે નહિ, ફેંકવાથી ફેલાઇ ન જાય તેમ પડે, અને પડવાથી વેરાઇ જાય નહિ, એ ગોળનો ઉત્તમ પાક જાણવો. છ તોલા, ચાર તોલા, અને બે તોલા, એમ ઉત્તમ, મધ્યમ, અને કનિષ્ટ માત્રાઓ ગોળ તથા ખાંડની ગણાય છે, એમ મુનિઓએ કહેલું છે.

તિલાદિ મોદકઃ—તલ, ભીલામો, હરડે, અને ગોળ, સમ ભાગે ખાવાથી અર્શ, શ્વાસ, ઉધરસ, બરલ, પાંડુ, અને જ્વરને હણે છે.

સગુડાભયાઃ—ગોળ સાથે હરડે ખાવાથી અર્શોનો એકદમ નાશ થાય છે.

પિત્ત અને કફનું શમન કરે છે, તથા ચળ અને ઉદરરોગોને મટાડે છે.

શંકર લોહઃ—શંકર-રુદ્ર-દંડપાણિ મહેશ્વરને પ્રણામ કરીને જીવિત આરોગ્યને ઇચ્છનારા નારદે ઇશ્વરને પ્રશ્ન કર્યો, કે 'હે નાથ! શસ્ત્ર, ક્ષાર, અને અગ્નિ વિના સરલ ઉપાયથી અર્શોની ચિકિત્સા મનુષ્યો કરે તે વિષે કંઇ કૃપા કરીને કહો.' નારદનું વચન સાંભળીને મનુષ્યોના હિતની ઇચ્છાવાળા શંકરે અર્શોના નાશનું ઉત્તમ ઔષધ નીચે પ્રમાણે કહ્યું.

વટ અને ગજવેલનું લોઢું લેઈ પતરાં કરાવી કચરો કાઢી શુદ્ધ કરવાં, પછી તેને મણશીળ, અને સોનામુખી, રતવેલિયાના મૂળના કલ્કો તથા પારાનો લેપ કરવો. પછી કોયલાના અંગારા ઉપર મૂકી ધમણથી ધમવું, અને તેમાંથી જે જ્વાળા નીકળે તેને ત્રિફળાના રસથી રોકવી. લોઢું ગળી જાય એટલે સાણસીથી તેને લેઇને ત્રિફળાના રસમાં ઠાર-

વું. વળી જેટલો ભાગ ગળેલો ન હોય તેને પાછો એજ રીતે ગરમ કરીને ત્રિફળાના રસમાં ઠારવો. વળી બાકી રહેલ ભાગનું પણ એમજ કરવું. એમ કરતાં છેવટ જે ભાગ બીલકુલ ન મરે એવો રહે તેને બીજા ધાતુઓની પેઠે મારીને ત્રિફળાના રસમાં નાંખવો. પછી ત્રિફળાના રસને તડકે સૂકવી નાંખીને લોઢાને લોઢાના વાસણમાં રાખી વાટીને ઝીણું ચુર્ણ કરવું. પછી એ ચુર્ણમાં ત્રિફળાનો રસ નાંખી ગારો કરી તે પીંડાને લોઢાના ઠામમાં બંધ કરી કપડમટ્ટી કરી અડાયાંના ગજપુટમાં પકાવવું. પછી અનુક્રમે ત્રિફળા, આદું, ભાંગરો, કાળો ભાંગરો, માનકંદ, ભીલામો, ચિત્રક, સૂરણ, અને એરડાનાં પાન તથા થોરના પુટો દેઇ દેઇને ગજપુટમાં પકાવવું. એ દરેક પુટ વખતે ચોસઠ તોલા લોહ ચુર્ણમાં અડસઠ તોલા ત્રિફળાનો રસ નાંખતાં જવો. (દરેક પુટ દેઇને પચીસ પચીસ ગજપુટો દેવા, એટલે એ રીતે ૨૫૦ દિવસે લોહ સિદ્ધ થઈ, પાણીમાં તરે એવું થાય છે). ત્રિફળાનો રસ પ્રથમથીજ ઉકાળીને આઠમે ભાગે રહેલો તૈયાર રાખવો જોઇએ. પછી લોઢા કે ત્રાંબાના ઠામમાં બત્રીસ તોલા ઘી નાંખી તેમાં એ લોહને પકાવવું અને કડછીથી હલાવવું. તેનો કોમળ, મધ્ય, કે ખરસટ, જે જાતનો પાક કરવો હોય તેવો કાળજીથી વૈદ્યે કરવો.

આ લોહ પ્રયોગના આરંભમાં ઉત્સવ તથા મંગલ કરવાં. પહેલે દિવસે આ લોહ મધ તથા ઘીમાં એક રતિ ખાવું. બીજે દિવસે બે રતિ ખાવું. એમ રોજ એકેક રતિ વધારતાં જતે અગ્નિના બળના પ્રમાણમાં બાર રતિ સૂધી ખાવું. વર્દ્ધમાન પિપ્પલીની રીતે તેના ઉપર ગાયનું દૂધ અને ગાયનું દૂધ ન મળે તો બકરીનું દૂધ પીવું. સ્નિગ્ધ અને વૃષ્ય પદાર્થો ખાવા. આ લોહથી જઠરાગ્નિ વધે છે, ભસ્મક મટે છે, અને વાયુ, પિત્ત, કોડ, વિષમજ્વર, ગોળો, નેત્રના રોગો, પાંડુરોગ; ઘેન, અરૂચિ, શુળ, પરિણામશુળ, પ્રમેહ, અપબાહુક, સોજા, અને રક્તસ્રાવ મટી જાય છે. વિશેષે કરીને અર્શોને તો હણેજ છે. એથી બળ અને પુષ્ટિ વધે છે, કાંતિ વધે છે, સ્વર સુધરે છે, શરીર હલકું થાય છે, આરોગ્ય તથા પોષણ મળે છે, આયુષ્ય વધે છે, લક્ષ્મી વધે છે. તેજ અને રુપ વધે છે, પુત્ર થાય છે, અને વળિયાં તથા પળિયાં મટી જાય છે. આ શંકર લોહનું નામ દુર્નામારિ પણ છે, અને તેથી હજારોવાર અર્શોનો નાશ થયેલો દેખાયો છે. જેમ અગ્નિથી ખડ બળી જાય છે, તેમ આનાથી અર્શો બળી જાય છે. રોગી સુકુમાર અને નાજુક હોવાથી મદ્ય પીનારો હોય તો તેને જૂના મદ્ય સાથેના ભોજનમાં આ લોહ આપવું. આ લોહ ખાનારે લાવાં, તેતર, બટાઉડાં, મોર, સસલાં, ચકલાં, વનચકલી, વૈયાં, હારીલ, શકરા. મોટાં લાવાં, જંગલીકુકડાં, કબૂતર, અને મૃગો વગેરે જાંગલ પશુ પક્ષીઓનું માંસ ખાવું, એ હિતકારી છે: માછલાં અનુકુળ હોય તો મંગુર અને રોહિત નામના મોટા મત્સ્યો તથા શહેલ મત્સ્ય વિશેષ હિતકારી છે. રીંગણું, પરવળ, ભોરીંગણીનાં ડોડવાં, મીઠીતૂંબડી,

શતાવરીનાં પાન, નેતરનો અગ્ર ભાગ, અકલકરો, તાંદળજો, બથવો, કોથમીર, ચિત્રક, કુંવાડિયો, નાળિયેર, ખજૂર, દાડમ, હરફારેવડી, શીંગોડાં, પાકી કેરી, દ્રાક્ષ, તાડફળ, એ સર્વ આ લોહ ખાનારને હિતકારી છે. ફણસ, ચણીબોર, બોર, લીંબુ, બીજોરાં, આંબલી, કરમદાં, જળપ્રાય દેશનાં પ્રાણીઓનાં માંસો, કલકલિયાનું માંસ, શેરડી, હંસનું માંસ, સારસ તથા બપૈયાનાં માંસ, નીલકંઠનું, કુંજનું, બગલીનું માંસ, માનકંદ, સેલાં, નિર્મળી, તડબૂજ, પદકોળું, કંટોલાં, સોપારી, કડવાં પરવળ, શરપંખો, કુંદરૂ, કાકડી, તથા આદિમાં ક વર્ણ હોય એવા સર્વ પદાર્થો, અને સર્વ દાળો, એ સર્વનો ત્યાગ કરવો.

જગત્ ઉપર ઉપકાર કરવા માટે તથા કુબેર ઉપરની કૃપાથી મહાદેવે સર્વ અર્શોનો નાશ કરનારૂં આ દુર્નામારિ નામનું લોહ કહેલું છે. મેરૂ ચલિત થાય, પૃથ્વી વાયુથી ઊંધી વળી જાય, ચંદ્ર તથા તારાઓ આકાશમાંથી નીચે પડી જાય, તો પણ આ કથન ખોટું નથીજ. જેઓ બ્રહ્મઘાતી, ઉપકાર ઉપર અપકાર કરનાર, ક્રૂર, અને ખોટું બોલનારા હોય તેને ધાર્મિક વૈદ્યે આ ઔષધ આપવું નહિ. આ લોહથી કંઇ હરકત થાય તો અગથિયાના રસમાં વાટેલાં વાવડીંગો બહુવાર સૂધી તડકે સૂકવીને તેનું ચૂર્ણ અગથિયાના રસમાં ચાટવું. અગ્નિ જેમ ઘીને પીગાળે છે તેમ આ પ્રયોગ લોહ વિકારને મટાડી દે છે. લોહ પેટમાં પચે છે ત્યારે સમયસર દસ્ત ઉતરે છે, પેટ હલકું થાય છે, ઓડકાર શુદ્ધ આવે છે, ગ્લાનિ મટે છે. અને આનંદ થાય છે. વાવડીંગનું ચૂર્ણ અગથિયાના રસમાં ચાટવાથી લોહના અજીર્ણથી થતું શૂળ તુરત મટે છે. આ લોહથી અતિસાર થાય તો દૂધ પીવાથી તે મટસે. આ લોહ બાર રતિથી વધારે ખવાય તો તેથી ભય આવી પડે છે.

## લોહી સ્રવતા અર્શોની ચિકિત્સા.

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक् । दुष्टास्रे निःसृते न स्युः शूलानाहासृगामयाः चन्दन किरातक्तिक्त धन्यथवासा सनागराः क्वथिताः । रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च ॥ चन्दनमत्र रक्तम् । नागरमत्र मुस्तकम् ॥ इति चन्दनादिक्वाथः ॥

नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात् दधिसरमथिताभ्यासाद्गुदजाः शाम्यन्ति रक्तवहाः ॥ दध्नस्तूपरि यो भागो घनस्नेहयुतः सरः ।

मथितं सररहितं निर्जलं वस्त्रपूतं दधि ॥

सपद्मकेशरक्षौद्रं नवनीतं नवं लिहन् । सिताकेशरसंयुक्तं रक्तार्शसि सुखी भवेत् ॥ पयसा सृतेन यूषैः सती नमुद्गाढकी मसूराणाम् । ओदनमद्यादम्लैः शालिश्यामाककोद्रवजम् ॥ शशहरिणलावमांसैः कपिञ्जलैरेणमांसैश्च ॥ अम्लैरीषत्सुगन्धैश्च ॥

समङ्गोत्पलमोचाकतिरीटोत्पलचन्दनैः । सिद्धं छागीपयो दद्याद्गुदजे शोणितात्मके ॥ समङ्गा लज्जालु । मोचाको मोचरसः । तिरीटो लोध्रः चन्दनं रक्तम् । इति समङ्गादिदुग्धम् ॥

भावितं रजनीचूर्ण स्नुहीक्षीरैः पुनः पुनः । बन्धनात्सुदृढं सूत्रं छिनत्त्यर्शो भगन्दरम् ॥ इति क्षारसूत्रम् ॥

લોહી સ્રવતા અર્શોમાં પ્રથમ તો વૈદ્યે ઉપેક્ષા કરવી, કેમકે ખરાબ લોહી સ્રવી ન જાય તો શૂળ, પેડુનો વાયુ, અને રક્ત દોષો થાય છે.

ચંદનાદિ ક્વાથ:—ચંદન (રાતું), કરિયાતું, ધમાસો, મોથ, દારૂહળદર, સૂંઠ, સુજ,વાળો, અને લીમડાનો ક્વાથ કરીને પીવાથી રક્તાર્શનું શમન થાય છે.

માખણ અને તલ ખાવાની ટેવથી; નાગકેશર, માખણ, અને સાકર ખાવાથી; અને દહિંનું ઘોળવું પીવાથી રક્તાર્શ શાંત થઇ જાય છે. દહિંની તર ચીકણી હોય તે સારક છે.

કમળના કેશરા, મધ, સાકર, અને નાગકેશર સાથે તાજું માખણ ખાવાની ટેવ રાખવાથી રક્તાર્શ મટી જાય છે. વટાણા, મગ, મસૂર, અને તુવેરના કંઈક ખાટા તથા સુગંધી કરેલા યૂષો સાથે; ઉકાળેલા દૂધની સાથે; અને સસલાં, હરણ, લાવાં, તેતર, તથા હરણનાં માંસો સાથે; ચોખા, શામો, કે કોદરાનું ભોજન કરવાથી રક્તાર્શ મટી જાય છે.

સમંગાદિદુગ્ધ:—રીસામણી એ ભાગ, કમળ, મોચરસ, લોદર, રતાંજળી, એમના કલ્કોથી પકાવેલ બકરીનું દૂધ રક્તાર્શવાળાને પાવું.

ક્ષારસૂત્ર:—હળદરનું ચૂર્ણ અને થોરના છીરની વારંવાર ભાવના દીધેલ દોરાથી બાંધવાથી અર્શ તથા ભગંદર કપાઇ જાય છે.

## બીજા સ્થાનોના અર્શોની ચિકિત્સા.

नासानाभिसमुत्थेषु तथा मेढ्रादिजेष्वपि। त्रिष्वप्यर्शःसु कुर्वीत तत्र तत्र यथोचितम्॥

બીજાં સ્થાનોના અર્શોની ચિકિત્સા:—નાક, નાભિ, તેમજ લિંગ આદિમાં થયેલા એ ત્રણે જાતના અર્શોમાં તે તે પ્રકારની યથોચિત ક્રિયાઓ કરવી.

## ચર્મકીલની ચિકિત્સા.

चर्मकीलन्तु संछिद्य दहेत्क्षारेण वाग्निना ॥

ચર્મકીલની ચિકિત્સા:—ચર્મકીલને કાપીને અગ્નિ અથવા ક્ષારથી બાળવું.

## અર્શોમાં પરહેજી.

वेगावरोधस्त्रीस्पर्शयानान्युत्कटकाशनम्॥ यथास्वं दोषलं चान्नमर्शसः परिवर्जयेत् ॥ इत्यर्शोऽधिकारः ॥

અર્શોમાં પરહેજી:—વેગોને અટકાવવા, સ્ત્રીનો સ્પર્શ, વાહન બેસવું, અને ઉભડક બેસવું, તથા તે તે દોષને કરનારાં અન્ન, એ સર્વ અર્શવાળાએ ત્યજી દેવાં.

---

# જઠરાગ્નિના વિકારોનો અધિકાર.

## પાસેનાં નિદાનો સહિત વિકારો.

कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः । मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ॥

કફની અધિકતાથી જઠરાગ્નિ મંદ થાય છે, પિત્તની અધિકતાથી તીક્ષ્ણ

થાય છે, વાયુની અધિકતાથી વિષમ થાય છે, અને ત્રણે દોષો સમ રહેવાથી સમસ્થિતિવાળા થાય છે. એ રીતે જઠરાગ્નિ ચાર પ્રકારનો થાય છે.

## મંદાગ્નિનું લક્ષણ.

**स्वल्पापि नैव मन्दाग्नेर्मात्रा भुक्ता विपच्यते । छर्दिः सादः प्रसेकः स्याच्छिरो जठरगौरवम् ॥**

જો અગ્નિ મંદ પડે છે તો બહુ થોડું ખાધેલું પણ પચતું નથી, અને ઉલટી તથા ગ્લાનિ થાય છે, લાળ ઝરે છે અને માથું તથા પેટ ભારે થાય છે.

## તીક્ષ્ણ અગ્નિનું લક્ષણ.

**मात्रातिमात्राप्यशिता तीक्ष्णाग्नेः पच्यते सुखम् । अतएव हि केनापि मतस्तीक्ष्णाग्निरुत्तमः ॥**

યોગ્ય કે વધારે પડતું ખવાય તો પણ તે તીક્ષ્ણ અગ્નિથી તુરત પચી જાય છે, તેથી કેટલાક તીક્ષ્ણાગ્નિને ઉત્તમ માને છે.

## વિષમ અગ્નિનું લક્ષણ.

**अशिता खलु मात्रापि विषमाग्नेस्तु देहिनः । कदाचित्पच्यते सम्यक्कदाचिन्न विपच्यते ॥ तस्याध्मानमुदावर्त्तं शूलं जठरगौरवम् । प्रवाहणमतीसारस्तथा स्यादन्त्रकूजनम् ॥**

ખાધેલી યોગ્ય માત્રા પણ વિષમાગ્નિથી કોઇવાર પચી જાય છે. અને કોઇવાર પચતી નથી. એથી આફરો, ઉદાવર્ત્ત, શૂળ, પેટમાં ભાર, પ્રવાહિકા, અને અતિસાર થાય છે, અને આંતરડાંમાં ખળભળાટ થાય છે.

## સમ અગ્નિનું લક્ષણ.

**समासमाग्नेरशितामात्रासम्यग्विपच्यते ॥ सोऽग्निरुत्तम एतेषु न तीक्ष्णस्तूत्तमो मतः ॥**

स च मधुरस्निग्धादिभोज्यः समोऽग्निरुत्तमः । तर्हि कथं तीक्ष्णस्य विकारमध्ये गणना । उच्यते ॥ समोऽग्निः क्षुधाविघातादाश्चैव तथा विकारं न करोति । तीक्ष्णस्तुस्वल्पकालमपि क्षुधाविघातादाश्चैव पैत्तिकान् विकारान् कुरुते ॥

**तीक्ष्णः पित्तसमुत्थानाद्विषमो वातहेतुकान् । तथा करोति मन्दाग्निर्विकारान् कफसम्भवान् ॥**

સમ અગ્નિવાળાને સમ માત્રાથી ખાધેલું પચી જાય છે. આ સર્વ અગ્નિઓમાં સમ ઉત્તમ છે, પણ તીક્ષ્ણ ઉત્તમ નથી. તીક્ષ્ણાગ્નિ પિત્તવિકારોને ઉત્પન્ન કરે છે, વિષમાગ્નિ વાતવિકારોને પેદા કરે છે, અને મંદાગ્નિ કફ વિકારોને ઉત્પન્ન કરે છે, આમ હોવાથીજ તીક્ષ્ણ અગ્નિ બરાબર પચાવનારો છતાં પણ તેને વિકાર કરનારો માનેલો છે.

## ભસ્મક રોગનું નિદાન તથા સંપ્રાપ્તિનું લક્ષણ.

**बहार्त्तिरूक्षान्नभुजां नराणां क्षीणे कफे मारुतपित्तवृद्धौ । अतिप्रवृद्धः पवनान्वितोऽग्निर्भुक्तं क्षणाद्भस्म करोति यस्मात् " तस्मादसौ भस्मकसंज्ञकोऽभूदुपेक्षितोऽयं पचते च धातून् ॥**

અત્યંત તીક્ષ્ણ અને રૂક્ષ અન્ન ખાનારા માણસનો કફ ક્ષીણ થઈ વાયુ તથા પિત્ત વધે છે, તેથી અત્યંત વધેલ વાયુ અગ્નિ સહિત ખાધેલાને ક્ષણ માત્રમાં ભસ્મ કરી નાંખે છે, તેથી તે રોગને ભસ્મક કહે છે. તેની ઉપેક્ષા કરવાથી ધાતુઓ પણ પચવા માંડે છે.

### ભસ્મકના ઉપદ્રવો તથા અરિષ્ટ.

**तृट्स्वेददाहमूर्छादीन् कृत्वैपोऽत्यग्निसम्भवान्। पक्त्वान्नमाशु धात्वादीन् स क्षिप्रं नाशयेत् ध्रुवम् ॥**

અગ્નિ વધવાથી તૃશા, સ્વેદ, દાહ, મૂર્છા, વગેરે ભસ્મકથી થાય છે, અને અન્ન પાકી ગયા પછી તુરતજ ધાતુઓને પકાવે છે.

### અજીર્ણનું હરનું નિદાન.

**अत्यम्बुपानाद्विषमाशनाच्च सन्धारणात् स्वप्नविपर्ययाच्च। कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥**

सन्धारणात् क्षुधामूत्रपुरीषादीनाम्। स्वप्नविपर्ययात् दिवाशयनाद्रात्रौ जागरणात्। लघु चापीत्यपि शब्दात् स्निग्धोष्णादिगुणयुक्तमपि ॥

**(अन्यच्च) तृष्णाभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन। प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिपाकमेति ॥**

परिप्लुतेन व्याप्तेन ॥

**अनात्मवन्तः पशुवद्भुञ्जन्ते येऽप्रमाणतः। रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि॥**

अनात्मवन्तः। अबुद्धिमन्तः। रोगानीकस्य विषूच्यादेर्मूलं कारणम् ॥

**(अन्यच्च) प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम्। तन्मूलो रोगसङ्घातस्तद्विनाशाद्विनश्यति ॥** अजीर्णतद्विनाशाद्विनश्यति। रोगसङ्घातः रोगसमूहः ॥

અત્યંત પાણી પીવાથી, વિષમ ભોજનથી, ક્ષુધા તથા મળમૂત્રના વેગો રોકવાથી, દિવસે સૂવાથી તથા રાત્રે જાગવાથી, માણસને સમયસર તથા યોગ્ય માત્રાથી ખાધેલું પ્રકૃતિને અનુકુળ, હલકું, સ્નિગ્ધ તથા ઉનું અન્ન પણ પચતું નથી, બીજે કહેલું છે કે– તરશ, ભય, ક્રોધ, લોભ, રોગથી થયેલી દીનતા, અને દ્વેષવાળાને ખાધેલું અન્ન બરોબર પચતું નથી. જડ પશુની પેઠે જે માણસ પ્રમાણ ઉપરાંત ખાય છે, તે પુષ્કળ રોગોને કરનારા અજીર્ણનો ભોગી થાય છે. બીજે કહેલું છે કે– વિશેષે કરીને વિષમ આહારથી માણસને અજીર્ણ થાય છે. તે ઘણા રોગોનું મૂળ છે, તેથી તે મટેથી સર્વ રોગ મટે છે.

### અજીર્ણનું સામાન્ય લક્ષણ.

**ग्लानिर्गौरवविष्टम्भभ्रममारुतमूढता। विबन्धो वा प्रवृत्तिर्वा सामान्याजीर्णलक्षणम् ॥** मारुतमूढता वायोरवरोधः। विबन्धः मलाप्रवृत्तिः ॥

ગ્લાનિ, ગૌરવતા, મળસ્તંભ, ભ્રમ, વાયુ, મૂઢતા, મળબંધ અથવા તેની બહુ પ્રવૃત્તિ, એ અજીર્ણનાં સામાન્ય લક્ષણો છે.

### અજીર્ણના ભેદો.

**आमं विदग्धं विष्टब्धं कफपित्तानि-**

**लैङ्गिभिः** ॥ त्रिभिरित्येकशो न तु मिलितैः ॥

**अजीर्णं केचिदीक्षन्ते चतुर्थं रसशेषतः ॥**

केचित्तु सुश्रुतादयः । रसशेषतः । भुक्तस्य पक्वस्य सारभूतो यो द्रवः स रसः । सोऽपि पच्यते । भुक्तस्य सारभूतो यो द्रवः स चापक्वो रसशेषः तस्मात् । चतुर्थमजीर्णम् । नन्वामाजीर्णाद्रसशेषस्य को भेदः । उच्यते । आमं मधुरतां गतमपक्वमन्नमेव । रसशेषस्तु भुक्तस्य पक्वस्य सारभूतो यो द्रवः स चापक्व इतिः भेदः॥

**अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च॥**

निर्दोषं गौरवभ्रमशूलादिदोषाऽजनकम् दिनपाकि च । अहोरात्रेण पाकं यातीति स्वभावः । यत्तु मात्राकालसात्म्यादिदोषाद्दिनान्तरे पाकं याति तद्दिनपाकि । अतएव । याममध्ये न भोक्तव्यमित्यादि वचनम् ॥

**वदन्ति षष्ठञ्चाजीर्णं प्राकृतं प्रतिवासरम् ॥**

प्राकृतमविकारकम् । प्रतिवासरं प्रतिदिनभावि । भुक्तं यावन्न जीर्णं तावदजीर्णमित्युच्यते । एतदभिधानस्य प्रयोजनं पाकार्थं वामपार्श्वशयनप्रियशब्दादिसेवनादिकम् । न चात्राहारस्य निषेधः । 'प्रातराशे त्वजीर्णे तु सायमाशे न दुष्यति' इति वचनेन सायमाशस्यावश्यं कर्तव्यत्वात् ॥

આમાજીર્ણ કફથી, વિદગ્ધાજીર્ણ પિત્તથી અને વિષ્ટબ્ધાજીર્ણ વાયુથી થાય છે. સુશ્રુત વગેરે કહે છે કે—જમ્યા પછી પેટમાં પાકી ગયેલો અન્નાદિકના સારરુપ દ્રવરૂપ રસ પણ પાકતાં પાકતાં તેમાંથી કાચો ભાગ રહી જાય છે તે 'રસશેષ' કહેવાય છે, અને તેનાથી રસશેષાજીર્ણ નામનું ચોથા પ્રકારનું અજીર્ણ થાય છે. અહીં કોઇને શંકા થાય કે આમાજીર્ણથી રસશેષાજીર્ણ શી રીતે જૂદું ગણાય? તેનું સમાધાન કે—મધુરપણું પામેલા અપક્વ અન્નથી આમાજીર્ણ થાય છે, અને અન્નના સારરૂપ દ્રવરસ અપકવ રહી ગયાથી થયેલું અજીર્ણ રસશેષાજીર્ણ કહેવાય છે. માટે એ બન્ને અજીર્ણ પરસ્પર જુદાંજ છે.

કેટલાક એમ કહે છે કે—શરીરમાં ભારેપણું, ભ્રમ અને શૂળ વગેરે દોષોને નહી ઉત્પન્ન કરનારા અન્નની માત્રા, કાળ તથા સાત્મ્યાદિ દોષથી તેજ દિવસે પેટમાં નહી પાકતાં બીજે દિવસે પાકે છે, તે પાંચમા પ્રકારનું અજીર્ણ છે. કે જે અજીર્ણને માટે 'જમ્યા પછી એક પોહોરની અંદર ફરીથી જમવું નહી' એ વચન કહેલું છે.

વળી કેટલાક કહે છે કે—વિકારોને ઉત્પન્ન ન કરે એવું જમેલું અન્ન જયાં સુધી પચ્યું નથી, ત્યાં સુધી તેને છઠ્ઠા પ્રકારનું અજીર્ણ ગણવું જોઇએ. એને અજીર્ણ ગણવાનું કારણ એજ કે—તેને પકાવવા સારૂં ડાબે પડખે સૂવું, પ્રિય ભાષણનું શ્રવણ કરવું, વગેરે કરવું, આ અજીર્ણમાં ખાવાનો નિષેધ નથી, કેમકે સવારે ખાધેલું પચ્યું ન હોય તો પણ સાંજે જમવાનું કહેલું છે.

## આમાજીર્ણનું લક્ષણ.

**तत्रामे गुरुतोत्क्लेशः शोथो गण्डाक्षिकूटगः॥ उद्गारश्च यथाभुक्तमविदग्धं प्रवर्तते॥**

गुरुता उदराङ्गयोः । उत्क्लेशः उपस्थितवमनमिव । अक्षिकूटोऽक्षिपुटकः ॥

ભારેપણું, ઉલટી, લમણા અને આંખો ઉપર સોજો, અને ખાધેલું નહિ પચ્યા જેવા ઓડકાર આમાજીર્ણમાં થાય છે.

## વિદગ્ધાજીર્ણનું લક્ષણ.

**विदग्धे भ्रमतृण्मूर्छाः पित्ताच्च विविधा रुजः । उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥** विविधा रुजः ऊषचोषदाहादयः ।

ભ્રમ, તૃષા, મૂર્છા, પિત્તના વિવિધ રોગો, ધૂમાડાવાળા ખાટા ઓડકારો, સ્વેદ, અને દાહ વિદગ્ધાજીર્ણમાં થાય છે.

## વિષ્ટબ્ધાજીર્ણનું લક્ષણ.

**विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः । मलवाताऽप्रवृत्तिश्च स्तम्भोमोहोऽङ्गपीडनम् ॥** वातवेदनाः तोदभेदादयः । स्तम्भोऽङ्गानाम् । मोहो मूर्छा ॥

શૂળ, આફરો, વાયુના અનેક રોગો, મળ અને વાયુનું રોકાવું, સ્તંભ, મોહ, અને કળતર, એ વિષ્ટબ્ધાજીર્ણનાં લક્ષણ છે.

## રસશેષાજીર્ણનાં લક્ષણો.

**रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवैः ।**

રસશેષાજીર્ણમાં અન્ન ઉપર અરૂચિ અને ભારેપણાથી છાતી સાફ હૃદયની રહેતી નથી.

## અજીર્ણના ઉપદ્રવો.

**मूर्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः । उपद्रवा भवन्त्येते मरणञ्चाप्यजीर्णतः ॥**

મૂર્છા, બકવાદ, વમન, લાળનોસ્રાવ, ગ્લાનિ, અને ભ્રમ, એ ઉપદ્રવો, તેમજ મરણ પણ અજીર્ણથી થાય છે.

## અત્યંત અજીર્ણથી બીજા રોગો થાય છે.

**आमं विदग्धं विष्टब्धमित्यजीर्णं यदीरितम् । विसूच्यलसकौ तस्माद्भवश्चापि विलम्बिका ॥** नात्र यथासंख्यम् । तदा विष्टब्धाद्विलम्बिका भवितुमर्हति । सा च कफवाताभ्यां भवतीत्येकैकतोऽजीर्णाद्विसूच्यादित्रयोत्पत्तिः ॥

આમ, વિદગ્ધ, વિષ્ટબ્ધ, એ અજીર્ણોથી વિસૂચિ (કોલેરા), અલસક, અને વિલંબિકા એ રોગો થાય છે. આમાં દરેક અજીર્ણથી ઉપર કહેલા ત્રણે રોગો થાય છે, એમ સમજવું.

## વિસુચી ( કોલેરા )ની નીરૂક્તિ.

**सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः । यत्राजीर्णेन सा वैद्यैर्विसूचीति निगद्यते ॥**

જે રોગોમાં અજીર્ણથી ગાત્રોમાં સોઇઓ ભોંકાતી હોય તેવી પીડા વાયુ કરે છે, તે રોગને વૈદ્યો વિસૂચી કહે છે. (સૂચી એટલે સે.ય.)

## વિસૂચીનું નિદાન.

**न तां परिमिताहारा लभन्ते विदितागमाः । मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥** विदितागमाः । ज्ञातायुर्वेदाः ॥

મિતાહારી અને આયુર્વેદને જાણનારાઓને વિસૂચી રોગ થતો નથી; પરંતુ મૂઢ મનવાળા, ઇંદ્રિયોને વશ નહી રાખનારા અને ખાઉધર લોકોને તે થાય છે.

## વિસૂચીનું લક્ષણ.

**मूर्छातिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः । वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः ॥** उद्वेष्टनं हस्तपादयोः ॥

મૂર્છા, અતિસાર, ઉલટી, તરશ, શૂળ, ભ્રમ, કળતર, બગાસાં દાહ, વિવર્ણતા, કંપ, હૃદયમાં પીડા, અને માથામાં દરદ, એ વિસૂચીનાં લક્ષણો છે.

## વિસૂચીના ઉપદ્રવો.

**निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता । अमी उपद्रवा घोरा विसूच्याः पञ्च दारुणाः ॥** अमी निद्रानाशादयः उपद्रवाः । सर्वेषामेव रोगाणां घोरा भयङ्कराः । विसूच्याः पञ्च दारुणाः विसूच्या विसूच्या स्तु पञ्चापि यदि स्युस्तदा दारूणा प्राणभयङ्कराः ॥

નિદ્રાનો નાશ, અણગમો, કંપ, મૂત્રાઘાત, અને બેભાની, આ પાંચ ઘોર ઉપદ્રવો વિસૂચી રોગનાં છે.

## અલસકનું લક્ષણ.

**कुक्षिरानह्यतेऽत्यर्थं प्रताम्यत्यथ कुजति । निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥ वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि । तस्यालसकमाचष्टे तृष्णोद्गारो च यस्य तु ॥**

आनह्यते आध्मायते । प्रताम्यति ताडयति । कूजति आर्त्तनादं करोति । कुक्षौ अजीर्णेन निरुद्धो मारुतः । उपरि धावति हृदयकण्ठादिकं गच्छति इत्यर्थः ॥

**काश्यपस्त्वाह । नाधो याति न चाप्यूर्ध्वमाहारो यो न पच्यते । कोष्ठे स्थितोऽलसीभूतस्ततोऽसावलसः स्मृतः ॥**

અત્યંત આફરો થઇ હાથ પગ પછડાય, ચીસો પાડે, પેટમાંનો પવન રોકાઇને છાતી વગેરેમાં ઉપર જતો હોય, મળ તથા વાયુ બહુજ રોકાઈ ગયાં હોય, તરશ અને ઓડકાર થયાં કરે, તેને અલસક થયાનું જાણવું. કાશ્યપે તો કહ્યું છે કે-"આહાર ઉપર ન જાય, નીચે ન જાય, પણ કોઠામાં સ્થિર થઇને રહે, તે રોગ અલસક કહેવાય છે."

## વિસુચી તથા અલસકનું અરિષ્ટ.

**यः श्यावदन्तोष्ठनखोऽल्पसंज्ञो वम्यर्दितोऽभ्यन्तरयातनेत्रः । क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरोऽसौ पुनरागमाय ॥**

सर्वे विमुक्ताः शिथिलीभूताः सन्धयोयस्य सः ॥

દાંત, હોઠ, અને નખ કાળા થઈ જાય, અત્યંત બેભાની આવે, ઉલટી થતી હોય, નેત્રો ઊંડાં જતાં રહે, સ્વર બેસી જાય, અને સર્વ સાંધાઓ ઢીલા પડી જાય, તે માણસ અવશ્ય મરી જવાનોજ.

## વિલંબિકાનું લક્ષણ.

**दुष्टन्तु भुक्तं कफमारुताभ्यां प्रवर्त्तते नोर्ध्वमधश्च यत्र । विलम्बिकान्तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः ॥**

भृशदुश्चिकित्स्यां प्रत्याख्येयामनुपचरणीयाम् ॥ इदमसाध्यञ्चेति जेज्जटः ॥

ખરાબ ખાધેલું અન્ન કફ અને વાયુને લીધે ઉપર કે નીચે જઇ શકતું નથી,

તેને પ્રાચીન શાસ્ત્રકારોએ વિલંબિકાનો રોગ કહ્યો છે. તેની ચિકિત્સા કરવી અશક્ય છે. જેજટ કહે છે કે–વૈદ્યે એ રોગની ચિકિત્સા કરવીજ નહી, અથવા કરવાને ના પાડવી.

## જીર્ણ અહારનું લક્ષણ.

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः । लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥

શુદ્ધ ઓડકાર આવે, ઉત્સાહ વધે, વેગો યથોચિત રીતે છુટે. હલકાઈ આવે, અને ભૂખ તરશ લાગે, એ આહાર પચ્યાનાં લક્ષણો છે.

## અજીર્ણની ચિકિત્સા.

हरीतकी तथा शुण्ठी भक्ष्यमाणा गुडेन च । सैन्धवेन युता वा स्यात् सातत्येनाग्निदीपनी ॥ गुडेन शुण्ठीमथचोपकुल्यां पथ्यां तृतीयामथ दाडिमं वा । आमेष्वजीर्णेषु गुदामयेषु वर्चोविबन्धेषु च नित्यमद्यात् ॥ व्योषंदन्ती त्रिवृच्चित्रं कृष्णामूलं विचूर्णितम् ॥ तच्चूर्णं गुडसम्मिश्रं भक्षयेत्प्रातरुत्थितः ॥ एतद्गुडाष्टकं नाम बलवर्णाग्निवर्द्धनम् । शोथोदावर्त्तशूलघ्नं प्लीहपाण्ड्वामयापहम् ॥ सर्वचूर्णसमो गुडो देयः गुडाष्टकम् ॥ दहनाजमोदसैन्धवनागरमरिचाणि चाम्लतक्रेण । सप्ताहादग्निकरं पाण्ड्वर्शोनाशनं परमम् ॥ तत्रामे वमनङ्कार्यं विदग्धे लङ्घनं हितम् । विष्टब्धे स्वेदनं शस्तं रसशेषे शयीत च ॥ वचालवणतोयेन वान्तिरामे प्रशस्यते । कणासिन्धुवचाकल्कं पीत्वा वा शिशिराम्भसा ॥

जलमत्र शरावमात्रम् । वचा कर्षार्धमिता । द्वयोश्चूर्णमुष्णेन जलेन पिबेत् । कणादिकल्कं वा पीत्वा वान्तिरामे प्रशस्यते इत्यनेनान्वयः ॥

धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः । आमाजीर्णप्रशमनं शूलघ्नं बस्तिशोधनम् ॥ भवेद्यदा प्रातरजीर्णशङ्का तदाभयां नागरसैन्धवाभ्याम् । विचूर्णितां शीतजलेन भुक्त्वा भुञ्ज्यादशङ्कं मितमन्नकाले ॥ विदह्यते यस्य तु भुक्तमात्रं दन्दह्यते हृच्च गलश्च यस्य । द्राक्षां सितामाक्षिकसम्प्रयुक्तां लीढ्वा भयां चाप्सिुखं लभेत ॥

હરડે તથા સૂંઠ ગોળ સાથે ખાવાથી, અથવા સૈંધવ સાથે ખાવાથી એકદમ અગ્નિદીપન થાય છે. સૂંઠ, પીપર, હરડે, અથવા દાડમ, ગોળ સાથે ખાવાથી આમાજીર્ણ, ગુદરોગો અને મળબંધ મટી જાય છે.

ગુડાષ્ટકઃ—સૂંઠ, મરી, પીપર, નેપાળાનું મૂળ, નસોતર, ચિત્રક, અને પીપરી મૂળનું ચૂર્ણ, તે સર્વના જેટલો ગોળ મેળવીને પ્રાતઃકાળમાં ઉઠીને ખાવું. આ ગુડાષ્ટક બળ, વર્ણ, અને અગ્નિને વધારનારૂં છે. સોજા, ઉદાવર્ત, શૂળ, બરલ, પાંડુ રોગ, એમને હણનારૂં છે.

ચિત્રક, અજમોદ, સૈંધવ, સૂંઠ, અને મરીનું ચૂર્ણ ખાટી છાશ સાથે સાત દિવસ સુધી ખાવાથી અગ્નિ વધે છે, તથા પાંડુ અને અર્શનો નાશ થાય છે. આમાજી-

ર્ણમાં વમન કરાવવું, વિદગ્ધાજીર્ણમાં લંઘન હિતકર છે. વિષ્ટબ્ધાજીર્ણમાં સ્વેદન ઠીક છે, અને રસશેષાજીર્ણમાં નિદ્રા સારી છે. આમાજીર્ણમાં અરધો તોલો વજ અને સેંધવ ૩૨ તોલા ઉના પાણીમાં લેઇને ઉલટી કરવી સારી છે. અથવા ટાઢા પાણીમાં પીપર, સૈંધવ, અને વજનો કલ્ક પીવો. આમાજીર્ણનું શમન કરનાર અને બસ્તિ શોધન ધાણા અને સૂંઠનો કવાથ ડાહ્યા માણસે પીવો. તે શૂળને પણ હણે છે. અને મૂત્રાશયને સાફ કરે છે. જો કદી સવારમાં અજીર્ણ જેવું જણાય, તો હરડે, સૂંઠ, અને સેંધવનું ચૂર્ણ ટાઢા પાણીમાં જમતી વેળા લેઇને જમવું. જમેલ અન્ન સારી રીતે પચતું ન હોય, અને છાતી તથા ગળામાં બળતરા થતી હોય, તો સાકર તથા મધ સાથે દ્રાક્ષ અને હરડે ચાટવાથી સુખ થાય છે.

## અજીર્ણ ઉપર ચૂર્ણો તથા ક્ષારો.

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे समधरणधृतानामष्टमो हिङ्गुभागः ॥ प्रथमकवलभुक्तं सर्पिषा चूर्णमेतत् जनयति जठराग्निं वातरोगांश्च हन्ति ॥ इति हिङ्ग्वष्टकम् ॥

द्वौ क्षारौ चित्रकं पाठा करञ्जं लवणानि च । सूक्ष्मैलापत्रकं भार्गी क्रिमिघ्नं हिङ्गु पौष्करम् ॥ सटी दार्वी त्रिवृन्मुस्तं वचा चेन्द्रयवास्तथा । वृक्षाम्लं जीरकं धात्री श्रेयसी चोपकुञ्चिका ॥ अम्लवेतसमम्लीका यवानी देवदारु च । अभयातिविषा श्यामा हवुषारग्वधं समम् ॥ तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ॥ क्षाराश्च लोहकिट्टश्च तप्तं गोमूत्रसेचितम् ॥ सूक्ष्मचूर्णानि कृत्वा तु समभागानि कारयेत् । मातुलुङ्गरसेनैव भावयेद्दिवसत्रयम् ॥ दिनत्रयन्तु शुक्तेन तथार्द्रकरसेन च । अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥ उपयुक्तं विधानेन नाशयत्याचिराद्गदान् । अजीर्णमथ गुल्मश्च प्लीहानं गुदजानिच । उदराण्यन्त्र वृद्धिश्च अष्ठीलां वातशोणितम् । प्रणुदत्युल्बणान्दोषान्नष्टाग्निं च प्रदीपयेत् ॥

द्वौ क्षारा स्वर्जिका यवक्षारश्च । लवणानि पञ्च । वृक्षाम्लं विषामिल इति लोके । श्रेयसी हरीतकी । अम्लवेतसमभावे चुक्रं दातव्यम् । श्यामाप्रियङ्गु । मुष्ककः घण्टापाठरि इति लोके । कोकिलाक्षः कोइलषा इति लोके । इति बृहदग्निमुखं चूर्णम् ॥

स्नुह्यर्कं चित्रकैरण्डवरुणं सपुनर्नवम् । तिलापामार्गकदलीपलाशं तिन्तिडी तथा ॥ गृहीत्वा ज्वालयेद्तत्प्रस्थं भस्माखिलं यथा । जलाढके विपक्तव्यं यावत्पादावशेषितम् ॥ सुप्रसन्नं विनिस्राव्य लवणप्रस्थसंयुतम् । पक्वं निर्धूमकठिनं सूक्ष्मचूर्णीकृतं पुनः । जवानीजीरकव्योषस्थूलजीरकहिङ्गुभिः । शीतोदकेन तच्चूर्णं पिबेत्प्रातर्हि मात्रया ॥ तस्मिन् जीर्णेऽश्नमश्नीयाद्यूषैर्जाङ्गलजै रसैः ॥ ईषदम्लैः सलवणैः सुखोष्णैर्वह्निदीपनैः ॥ एतेनाभिविवर्द्धेत बलमारोग्यमेव च । तत्रानुपानं शस्तं हि तक्रंवा भोजने हितम् । मन्दाग्न्यर्शोविकारेषु वातश्लेष्मामयेषु च ॥ सर्वाङ्गशोथरोगेषु शूलगुल्मोदरेषु च ॥ अश्मर्यां शर्कराश्च विण्मूत्रानिलरोगिषु ॥ इति वैश्वानरक्षारः ॥

सामुद्रलवणं कार्यमष्टकर्षमितं बुधैः । सौवर्चलं पञ्चकर्षं त्रिडसैन्धवधान्यकम् ॥ पिप्पली पिप्पलीमूलं पत्रकं कृष्णजीरकम् । तालीशं केशरं चव्यमम्लवेतसकं तथा ॥ द्विकर्षमात्राण्येतानि प्रत्येकं कारयेत् बुधः । मरिचं जीरकं विश्वमेकैकं कर्षमात्रकम् ॥ दाडिमं स्याच्चतुःकर्षं त्वगेला चार्द्धकर्षिका । एतच्चूर्णीकृतं सर्वं लवणं भास्कराभिधम् ॥ भक्षयेच्छानमानन्तु तक्रमस्तुककाञ्जिकैः । वातश्लेष्मभवं गुल्मं प्लीहानमुदरक्षयम् ॥ अर्शांसि ग्रहणीं कुष्ठं विबन्धश्च भगन्दरम् । शूलं शोथं श्वासकासामदोषांश्चापि हृद्रुजम् ॥ अश्मरीं शर्कराश्चापि पाण्डुरोगं कृमीनपि । मन्दाग्निं नाशयेदेतद्दीपनं पाचनं परम् ॥ हिताय सर्वलोकानां भास्करेण विनिर्मितम् । हन्यात्सर्वाण्यजीर्णानि भुक्तमात्रमसंशयम् ॥

अत्र दाडिमस्य बीजानां कर्षचतुष्टयमितं देयम् । इति भास्करलवणम् ॥

सैन्धवसमूलमगधा चव्यानलनागरं पथ्या । क्रमवृद्धमग्निवृद्धै वडवानलनाम चूर्णं स्यात् ॥ इति वडवानलचूर्णम् ॥

पथ्यानागरकृष्णाकरञ्जबिल्वाग्निभिः सितातुल्यैः । वडवानल इव जरयति बहुगुर्वतिभोजनं चूर्णम् ॥

इति द्वितीयवडवानलचूर्णम् ॥

एलात्वक् नागपुष्पाणां मात्रोत्तरविवर्द्धिता । मरिचं पिप्पली शुण्ठी चतुष्पञ्चोत्तरोत्तरा ॥ इत्यागमेनानि यावन्ति तावती सितशर्करा । चूर्णमेतत्प्रयोक्तव्यमाग्निसन्दीपनं परम् ॥ इति समशर्कराचूर्णम् ॥

હિંગ્વષ્ટક:—સૂંઠ, મરી, પીપર, અજમોદ, સૈંધવ, જીરૂં, શાહજીરૂં તથા આઠમી હિંગ, એઓને સમ ભાગે લેઈ ચૂર્ણ કરીને ઘીમાં કાલવીને જમવાના પ્રથમ કોળિયામાં ખાવાથી જઠરાગ્નિ પ્રદીપ્ત થાય છે, અને વાયુના રોગો હણાય છે.

બૃહદગ્નિમુખ ચૂર્ણ:—જવખાર, સાજીખાર, ચિત્રક, કાળીપાડ, કરંજ, પંચલવણો, ઝીણી એલચી, તમાલપત્ર, ભારંગી, વાવડીંગ, હિંગ, પુષ્કરમૂળ, કચુરો, દારૂહળદર, નસોતર, મોથ, વજ, ઇંદ્રજવ, કોકમ, જીરૂં, આમળાં, હરડે, પીપર, અમ્લવેતસ, આંબલી, અજમો, દેવદાર, હરડાં, અતિવિષ, કાળું નસોતર, અને ગરમાળો; તથા [illegible] ખાખરો, [illegible] એ પાંચના [illegible] ગોમૂત્રમાં ટાઢું પાડેલું લોહાનું કીટું; એ સર્વ સમભાગે ચુર્ણ કરીને બીજોરાંના રસની, અથાણાના રસની તથા, આદાના રસની ત્રણ ત્રણ દિવસો સુધી ભાવનાઓ દેવી, આ અત્યંત અગ્નિ વધારનારૂં ચુર્ણ પ્રદીપ્ત અગ્નિ જેવું પરાક્રમી છે. તેનો યોગ્ય વિધિથી ઉપયોગ કરાય તો તે રોગોને હણી નાંખે છે. અજીર્ણ, ગુલ્મ, બરલ, અર્શ રોગો, અંત્રવૃદ્ધિ, અને ઉદરના રોગોને હણે છે, અગ્નિને વધારે છે. અષ્ઠીલા, વાતરક્ત તથા અત્યંત ઉલ્વણ દોષોને હણે છે, અને આઠ અગ્નિઓને પ્રદીપ્ત કરે છે.

વૈશ્વાનર ક્ષાર:—થોર, આકડો, ચિ-

ત્રક, એરંડો, વાયવરણું, સાટોડી, તલ, અઘેડો, કેળ, ખાખરો, અને આંબલીને બાળીને ચોસઠ તોલા ભસ્મ કરવી. તેને ૨૫૬ તોલા પાણીમાં પકાવી ચોથો ભાગ પાણી રહે એટલે ગાળી લઇને તેમાં ૬૪ તોલા સૈંધવ નાંખીને પકાવવું. નિર્ધૂમ પાકી જાડું થાય ત્યારે તેનું પાક્યું ચુર્ણ કરવું. અજમો, જીરૂં, સૂંઠ, મરી, પીપર કલોંજી જીરૂં, અને હિંગના ચૂર્ણમાં તે ચૂર્ણ મેળવીને યોગ્ય માત્રાથી ટાઢા પાણીમાં સવારમાં પીવું. તે પચી ગયા પછી કાંઈક ખાટા, ખારા, ગરમ, અને દીપન યૂષોની સાથે, તથા જંગલી પ્રાણીઓના માંસરસોની સાથે, ભોજન કરવું, એથી અગ્નિ, બળ, અને આયુષ્ય વધે છે. તેનું અનુપાન તેમજ ભોજનમાં હિતકર છાશ છે. મંદાગ્નિ, અર્શના વિકારો, અને વાત તથા કફના રોગોમાં, સર્વાંગ સોજાના રોગમાં, શૂળ, ગુલ્મ, ઉદરરોગો, પથરી, અને પેશાબની રેતી, તેમજ વિષ્ટા, મૂત્ર અને વાયુના રોગોમાં પણ તે હિતકર છે.

ભાસ્કર લવણઃ—સામુદ્ર લવણ ૮ તોલા, સંચળ ૫ તોલા, તથા બિડલૂણ સૈંધવ, ધાણા, પીપર, પીપરી મૂળ, તમાલપત્ર, કાળી જીરી, તાલીશપત્ર, નાગકેશર, ચવક, અમ્લ વેતસ, એ દરેક બે બે તોલા; મરી, જીરૂં અને સૂંઠ એક એક તોલો; દાડમ ચાર તોલા; તજ તથા એલચી અરધો અરધો તોલો; એ સર્વનું ચૂર્ણ ભાસ્કર લવણ નામનું કહેવાય છે. તે પા તોલો લઇ છાશ, મસ્તુ, અને કાંજી સાથે ખાવું, તેથી વાત કફથી થયેલ ગુલ્મ, બરલ, ઉદરરોગો, ક્ષય, અર્શ, મરડો, કોઢ, મળબંધ, ભગંદર, શુળ, સોજો, શ્વાસ, ઉધરસ, આમ, દોષો, છાતીના રોગો, પથરી, શર્કરા, પાંડુરોગ, કૃમિ, મંદાગ્નિ, એ સર્વનો તે નાશ કરે છે. તે પરમ દીપન તથા પાચન છે. સર્વ લોકોના હિતને અર્થે ભાસ્કરે (સૂર્યે) તે બનાવ્યું છે, સર્વ અજીર્ણો એ ખાતાં માત્રમાંજ નાશ પામે છે, તેમાં સંશય નથી.

વડવાનલ ચૂર્ણઃ—સૈંધવ, પીપરીમૂળ પીપર, ચવક, ચિત્રક, સૂંઠ, અને હરડે, એક, બે, એમ એક એક તોલો વધતે ભાગે લેઈ ખાવાથી અગ્નિ વધે છે. એ ચૂર્ણ વડવાનલ નામનું છે.

બીજું વડવાનલ ચૂર્ણઃ—હરડે, સૂંઠ, પીપર, કરંજ, બીલાં, ચિત્રક, તથા એ સર્વ બરોબર સાકર લેવી. આ ચૂર્ણ વડવાનલની પેઠે બહુ ભારે અન્નને પણ પચાવી દેછે.

સમશર્કર ચૂર્ણઃ—એલચી ૧ ભાગ, તજ ૨ ભાગ, નાગ કેશર ૩ ભાગ, મરી ૪ ભાગ, પીપર ૫ ભાગ, અને સુંઠ ૬ ભાગ; એ સર્વના જેટલી સાકર લેવી. આ પરમ અગ્નિદીપન કરનારૂં ચૂર્ણ છે.

## અજીર્ણ ઉપર રસ.

**द्विपलं गन्धकं शुद्धं पलमेकन्तु पारदम्। मृतलोहं तथा ताम्रं कर्षद्वयमितं पृथक् ॥ सच्चूर्णं सर्वं सम्मिश्रं द्रावयित्वाग्नियोगतः। सम्यक् द्रुतं समस्तं तत् पञ्चाङ्गुलदले क्षिपेत् ॥ पुनः सञ्चूर्ण्य तत् सर्वं लोहपात्रे निधापयेत्। जम्बीररस्य रसं तत्र**

पूतं पलशतं क्षिपेत् ॥ चुल्यां निवेश्य तद् यत्नान्मृदुना वह्निना पचेत् । रसे तस्मिन् घनीभूते तत् संशोष्य विचूर्णयेत् ॥ पञ्चकोलकषायस्य चुक्रेण सहितस्य च । भावना तत्र दातव्या पश्चात् संशोषयेच्छनैः ॥ भृष्टटङ्कनचूर्णेन तुल्येन सह मेलयेत् । मरिचेनापि तुल्येन तदर्धेन विडेन च ॥ भावयेत् सप्तकृत्वस्तु चणकाम्लजलेन च । ततः संशोष्य सम्पिष्य कूपमध्ये निधापयेत् ॥ रसः क्रव्यादनामायं भैरवानन्दयोगिना । उक्तः सिंहलराजाय बहुमांसाशिने पुरा ॥ भक्षयेद्भोजनस्यान्ते माषद्वयमितं रसम् । भक्षयित्वा रसं पश्चात् विचक्रं ससैन्धवम् ॥ अत्यर्थं गुरु यद्भुक्तमतिमात्रमथापि च । तत्सर्वं जीर्यति क्षिप्रं रसस्यैतस्य भक्षणात् ॥ शूलं गुल्मञ्च विष्टम्भं प्लीहानमुदरं तथा । रसः क्रव्यादनामाऽयं विनिहन्ति न संशयः ॥

इति क्रव्यादरसोऽजीर्णे रसेन्द्रचिन्तामणौ रसरत्नप्रदीपे च ॥

क्षारत्रयं सूतगन्धौ पञ्चकोलमिदं समम् । सर्वैस्तुल्या जया भृष्टा तदर्धा शिग्रुजा जटा ॥ एतत्सर्वं जयाशिग्रुवह्नीनां केवलैर्द्रवैः । भावयेत् त्रिदिनं धर्मे ततो लघुपुटे पचेत् ॥ मार्कवस्य द्रवैर्घृष्टो रसो ज्वालानलो भवेत् । निष्कोऽस्य मधुना लीढोऽनुपानं गुडनागरम् ॥ हन्त्यजीर्णमतीसारं ग्रहणीमग्निमार्दवम् । श्लेष्महृल्लासवमनमालस्यमरुचिं जयेत् ॥

( अथ पञ्चकोलम् ) पिप्पली पिप्पलीमूलचव्यचित्रकनागरैः

जयात्र विजया । मार्कवः भृङ्गराजः । इति ज्वालानलो रसः । अजीर्णे रसरत्नप्रदीपे ॥

टङ्कणं रसगन्धौ च समभागं त्रयं विषात् । कपर्दः स्वर्जिकाक्षारो मागधी विश्वभेषजम् ॥ पृथक् पृथक् कर्षमात्रं वसुभागामिहोषणम् । जम्बीराम्लैर्दिनं घृष्टं भवेदग्निकुमारकः ॥ विसूचीशूलवातादिवह्निमान्द्यप्रशान्तये ॥

क्षारो जवक्षारः । अग्निकुमारो विसूच्यामजीर्णे रसरत्नप्रदीपे । रसेन्द्रचिन्तामणौ ॥

पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितम् । तत्र जातिफलमर्द्धभागिकं तिन्तिलीफलरसेन मर्दितम् । वह्निमान्द्यदशवक्त्रनाशनो रामबाण इति विश्रुतो रसः । संग्रहग्रहणिकुम्भकर्णकमामवातखरदूषणं जयेत् ॥ दीयते तु मरिचानुपानतः सद्य एव जठराग्निदीपनः । रोचनः कफकुलान्तकारकः श्वासकासवमिजन्तुनाशनः ॥

पारा भाग १ । विष भाग १ । लवङ्ग भाग १ । गन्धक भाग १ । मरिच भाग २ । जायफल भाग अर्ध । इति रामबाण रसः । रसेन्द्रचिंतामणौ ॥

( अथ शङ्खवटी ) पलञ्चिञ्चाक्षारं पलमितमिदं पञ्चलवणम् । द्वयं सम्यक्पिष्टं भवति लघुनिम्बूफलरसैः ॥ ततः पिष्टे तस्मिन् पलपरिमितं शङ्खशकलम् । क्षिपेद्वाराम् सप्त द्रवमिह च तेनैव विधिना ॥ प-

